# प्रौढमनोरमा ।

महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचिता
तत्पौत्रेण महामहोपाध्यायश्रीहरिदीक्षितेन
विरचितलघुशब्दरत्नाख्यव्याख्यया
समलङ्कृता ।

—:o:—

श्रीयुतनित्यानन्दपन्तपर्वतीयान्तेवासिना साहित्यतीर्थ-
व्याकरणोपाध्यायेन भाण्डार्युपनामकमाधवशास्त्रिणा
विरचितया प्रभानामकटिप्पण्या
परिष्कृता संशोधिता च ।


काश्यां
विद्याविलासनाम्नि यन्त्रालये
संमुद्य प्रकाशिता ।
संवत् १९७६

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT SERIES OFFICE.
BENARES CITY.

*Printed by Jaykrishna Dass Gupta,*
*at the Vidya Vilas Press*
*Benares.*
*1920*

## जयकृष्णदास-हरिदास गुप्तः-चौखम्बा संस्कृत सीरीज आफिस बनारस सिटी।

१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति। ... ... ... ... ... ...

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् १२

(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १९

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः ... १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचित तर्कपादः (मीमांसा) ... ... २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानं। सम्पूर्णम्। (वेदान्तः) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा। ... २

(१०) सिद्धित्रयम्- विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः; आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः (न्यायः) ... ... ... ५

(१३) विधिरसायनम्। श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) ... ... ... १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) ... ... २

(१६) मीमांसाबालप्रकाशः। जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम्। महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः। (वेदान्तः) १

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् ... ... १९

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितं १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम्। (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ... १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ... ... ... ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता। २

(२५) क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्यो व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ... ... ४

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाख्यटीकायुतम् ... ... ... २

(२७) षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः ... ... ... १

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्नार्णवः

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधितेः जागदीशी टीका ... ... ... १

(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः। सापिण्ड्यदीपकश्च १

(३१) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ...

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः

(३३) वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता

# भूमिका ।

—:०:—

को नु खलु जगतीतले विचक्षणो न विजानाति, निखिल-जगन्मण्डलमण्डनायमानगीर्वाणवाणीमहार्हमणिशाणायमानस्य पाणिनी-यतीव्रतरतपस्यासंतोषितश्रीमहेश्वरवरप्रसादसमासाक्षरच्छन्दोमूलत्वेन सकलेतरव्याकरणातिशायिनो वेदाङ्गधुरीणतामवलम्बमानस्य पाणिन्युपज्ञ-व्याकरणस्य अतिसारवत्तरं सकलप्रयोजनमौलिभूतं सहस्रवदनसंवर्णितं 'रक्षोहागमलघ्वसन्देहा'इत्यादिकं प्रयोजनम् । को वा तदधिकारी उक्तं प्रयोजनमनुसन्दधानो व्याकरणाध्ययने न प्रवर्तते । कथं वा पदपदार्थशक्ति-ग्रहपदसाधुत्वादिज्ञानसाधनत्वेनान्तरङ्गस्यैतस्य प्रथमत एवात्रश्याध्येतव्यता न स्यात् । श्रीमद्विद्वदग्रेसरः श्रीभास्कराचार्योऽपि समुदलिखदेतदेवम्—

यो वेद वेदवदनं सदनं हि सम्यक् ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम् ॥ यस्मादतः प्रथममेतदधीत्य धीमान् शास्त्रान्तरेषु भवति श्रवणेऽधिकारी ॥ १ ॥

तच्चेदं पाणिनीयव्याकरणं सूत्राष्टाध्यायीनिबद्धं भगवान् महा-मुनिवरः सहस्रवदनावतारभूतः पतञ्जलिर्लोकैककरुणापरः प्रत्यक्षरं वेदा-क्षरनिर्विशेषेण महता गौरवभरेण अवभाषदिति च श्रद्धातिशयजननमहा-निदानं परममहाप्रमोदस्थानं चैतन्नो व्याकरणमाभिजिगांसूनाम् ।

अथ खिस्ताब्दमानेन १६३० परिमितसंवत्सरसमये श्रीवारा-णसीवास्तव्यो महाराष्ट्रब्राह्मणो भट्टकुलारविन्दतरणिः श्रीमल्लक्ष्मीधरप-ण्डितवरतनूजन्मा श्रीमच्छेषकृष्णाभिधगुरोश्चरणाराधनसमासादितवैदुषी-भूषितः सुगृहीतनामधेयो विद्यावारिधिमथनदीक्षितः श्रीमद्भट्टोजिदीक्षितो व्याकरणमहाभाष्यरत्नाकरं निजशेमुषीमन्थेन प्रमथ्य शब्दकौस्तुभं नाम अनर्घरत्नं समुददीधरादिति विदितचरमेव सर्वेषाम् । अनन्तरं च स एव श्रीहेमचन्द्रकृतशब्दानुशासनं श्रीयुतरामचन्द्रसूरिकृतप्रक्रियाकौमुदीं चावलम्ब्य यथार्थनामानं सिद्धान्तकौमुदीनामानं सुप्रतीततरं महनीयग्रन्थं विरचयांचकार । स्वयमेव च प्रौढमनोरमाख्यया टीकया तं ग्रन्थं समटिटीकत् । सेयं प्रौढमनोरमा स्वयमेव सकलप्रौढवैयाकरणमनो-

रमणचगाऽपि श्रीमद्भट्टोजीदीक्षिततनयश्रीभानुदीक्षिततनूभवेन विद्वदग्रगणेयेन श्रीहरिदीक्षितेन व्याख्यानरत्नेन शब्दरत्नेन समलमकारि ।

एवमियं शब्दरत्नविभूषिताऽपि प्रौढमनोरमा साम्प्रतं वाराणस्यादिषु प्रचलिताध्यापनशैल्यनुसारेण तत्प्रवणानामपि च्छात्राणां दुरवगमेत्यालोच्य श्रीयुतगुरुचरणनित्यानन्दपन्तपर्वतीयाज्ञया प्रौढमनोरमाकारशब्दरत्नकारयोः तत्तन्मतविशेषप्रदर्शनपूर्वकं, उभयमतयोः साधुत्वासाधुत्वविशदनगर्भं विषयावगमसहकारिण्या अस्याः प्रभानामकटिप्पण्या विरचने प्रावर्तिषि । अस्याश्च निर्माणे प्रायशो व्याकरणमहाभाष्यं तत्प्रदीपं, लघुशब्देन्दुशेखरं अस्मद्गुरुचरणविनिर्मिततट्टिप्पणादिकं च अवलम्ब्य स्थले स्थले यथामति विविच्य समापयमिदं कार्यम् । अनेन च श्रीमत्सरस्वतीसेवापरायणविद्वज्जनमानसाधिष्ठाता श्रीकाशीविश्वेश्वरः प्रीयताम्

अत्र च विद्वज्जना गुणैकपरिमार्गणनिरताः कण्टकाविद्धसरोजमुकुलवत् भीषणतरमहासरीसृपनक्राद्याक्रान्तरत्नाकरवच्च सतुषपलालसस्यादिपिञ्जरितमञ्जरीवच्च मानुषमनीषासुलभदोषाणामपरिहार्यतया सम्भाव्यमानदोषादप्येतस्मात् हंसक्षीरन्यायेन निसर्गत एव गुणग्रहणपरा भवेयुरिति न तेषां पुरतः साञ्जलिबन्धं विहिताऽपि प्रार्थना विशेषं कंचन करिष्यतीति दोषकुमरिद्रेषणनदीष्णदृष्टय एव मया—

> न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ॥
> दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ १ ॥

इति श्रीमत्कुमारिलभट्टोक्तिमनुसन्धाप्य कणिशेभ्य इव धान्यकणानत्रत्यान् गुणकणानादाय महान्तं धान्यराशिमिव गुणौघं परिकल्प्य तदास्वादनेन अनुगृह्णन्तु मामिति वारं वारं साञ्जलिबन्धं सम्प्रार्थ्यन्ते । अस्य ग्रन्थस्य संमुद्र्यप्रमाणस्य च संशोधनकार्ये श्रीव्रिजयकृष्णदासगुप्तेन प्रवर्तितोऽहं तदपि कार्यं समपादयम् । अत्र च यथासम्भवं सावधानतया संशोधनेऽपि अनेककारणवशादवशिष्टा अशुद्धीः संकलय्य प्रान्ततो निर्दिष्टा आलोच्य तत्र तत्र विषयाशुद्धिजनितक्लेशं नानुभवेयुर्निपुणा इति चाशासे ।

विद्वज्जनानुचरो
व्याकरणोपाध्यायः साहित्यतीर्थश्च
भाण्डार्युपाह्वो माधवशास्त्री

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १० | २२ | पत्तिध्वनिता | पत्तिर्ध्वनिता |
| ३७ | २१ | भेदाभावस्त्वस्य | भेदाभावस्य |
| ४२ | १५ | तेन अतो लोपो | तेन आतो लोपो |
| ५१ | ९ | दृष्यत्रे | दृष्ट्यत्रे |
| ६३ | २३ | शाकन्ध्वाष्विति | शाकन्ध्वादिष्विति |
| ७२ | २४ | अत एव | अन्यथा |
| ७३ | १८ | सार्वत्रिकवात् | सार्वत्रिकत्वात् |
| ७५ | २२ | ननु विघ्न् | ननु विश्व |
| ८८ | १६ | तत्सामर्थ्यान्वेन | तत्सामर्थ्याख्यानेन |
| १०७ | १४ | तस्यादिदेशेन | तस्यातिदेशेन |
| १०९ | २५ | शेपत्वं | शेषत्वम् |
| ११० | ११ | परस्परसम्बन्धेन | परस्परासम्बन्धेन |
| ११२ | १९ | इति सुत्रेभाष्ये | इति सूत्रे भाष्ये |
| ११५ | १३ | द्रव्यसिङ्ग | द्रव्यलिङ्ग |
| | १५ | अष्याकाङ्क्षितत्वात् | अप्याकाङ्क्षितत्वात् |
| १२० | १९ | शद्बादणि | शब्दादणि |
| १२५ | ५ | निर्दिष्टपदस्य | निर्दिष्टपदस्य |
| १३३ | १८ | उभावुभोभाविति | उभाबुभोभाविति |
| १३५ | १ | कुत्स्नेच | कृत्स्नेच |
| | ६ | यथापि | तथापि |
| १३६ | १० | प्रातिवादिनि च | प्रतिवादिनि च |
| १४० | १६ | अकच्स्वरौ | अकच्स्वरौ |
| १४१ | २९ | प्रकृतित्कवाभावेन | प्रकृतिकत्वाभावेन |
| १४२ | १८ | न्यासकुन्मतमिति | न्यासकृन्मतमिति |
| १४४ | ४ | प्रतिपदोक्तवात् | प्रतिपदोक्तत्वात् |
| | १० | त्यदादीना | त्यदादीनां |
| | १४ | पुंवत्भावर्थं | पुंवत्भावार्थम् |
| १४८ | १० | परिभाषयाः | परिभाषायाः |
| १६८ | ९ | स्थितमियुक्तम् | स्थितमित्युक्तम् |
| १७९ | २६ | अजहत्स्वार्थापक्षेत्विति | अजहत्स्वार्थापक्षे ष्विति |
| १८४ | २३ | मावः | भावः |
| १८५ | ७ | णिद्वद्भावाद्दद्धिः | णिद्वद्भावाद्वृद्धिः |
| १८६ | १० | शम्भवत् | शम्भुवत् |
| | १४ | ह्रस्वाभावेन | ह्रस्वाभावेन |
| | १६ | ह्रस्वस्तथा | ह्रस्वस्तथा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम्। |
|---|---|---|---|
| १८७ | १२ | सलुनेति | सुलुनेति |
| १८८ | १० | व्यञ्जन | व्यञ्जन |
| १८८ | ११ | ज्ञापक | ज्ञापक |
| १८९ | २ | ङः सि | ङः सि |
| | १२ | ङः सि | ङः सि |
| १९० | १५ | निर्णेतु | निर्णेतुं |
| १९१ | ४ | प्रतिपदिक | प्रातिपदिक |
| | १० | रघदिः | रघादिः |
| | २१ | भाष्भावस्तु | भष्भावस्तु |
| १९२ | ६ | उठ्ग्रहणं | ऊठ्ग्रहणं |
| | १६ | संज्ञा | संज्ञा |
| १९५ | २६ | तिङन्तवृत्तिधर्म | तिङन्तवृत्तिधर्म |
| १९७ | ८ | तेनविजित्यर्यः | तेन विजित्यर्थः |
| | ११ | तूचितत् | तूचितम् |
| | १५ | सङ्गोपानाय | सङ्गोपनाय |
| १९८ | १९ | शशकाद्यरिक्त | शशकाद्यतिरिक्त |
| | २३ | नावस्यानुष्ठेयत्वं | नावश्यानुष्ठेयत्वं |
| १९९ | १७ | व्यञ्जन | व्यञ्जन |
| २०२ | ७ | अग्निर्मूर्धा | अग्निर्मूर्धा |
| २०३ | १५ | तृज्वत्क्रोष्टु | तृज्वत्क्रोष्टु |
| | २२ | सर्वेण | सवर्ण |
| | २८ | मधघन् | मघवन् |
| २०५ | १९ | प्रमाण्य | प्रामाण्य |
| २०८ | ६ | निर्मुलमपि | निर्मूलमपि |
| | १५ | प्रजभूम्यादि | प्रजाभूम्यादि |
| | २३ | मावः | भावः |
| | २८ | ह्रस्वः | ह्रस्वः |
| २०९ | १ | तिस्थिते | स्थिते |
| | ९ | सर्वनामस्था | सर्वनामस्थान |
| | २६ | झल्युपोत्तत्तम | झल्युपोत्तम |
| २१० | ३ | वर्मरूपस्य | धर्मरूपस्य |
| २११ | १५ | एतज्ज्ञापक | एतज्ज्ञापक |
| २१२ | ४ | भाष्यकैयटयोःस्पष्टम। | भाष्यकैयटयोः स्पष्टम् |
| | १० | विमाषा। | विभाषा |
| | ११ | त्यत्रेकाच | त्यत्रैकाच |
| | १५ | इतीण्निषेघः। | इतीण्निषेधः |
| | २३ | प्राप्नोतीति। | प्राप्नोतीति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१३ | २१ | हल्ङ्यादि | हल्ङ्यादि |
| २१४ | १ | कुञ्चेरप्येवम् | क्रुञ्चेरप्येवम् |
| | ८ | झलच | झलच |
| | १० | झलीति | झलीति |
| | ११ | झलीत्य | झलीत्य |
| | २२ | बोद्यम् | बोध्यम् |
| २१५ | ६ | ऊर्गिति | ऊर्गिति |
| २१६ | १८ | न्यायस्यात्र | न्यायस्यात्र |
| | २१ | प्रवृत्ति | प्रवृत्तिः |
| २२० | ४ | ऽस्त्येवेपि | ऽस्त्येवेति |
| २२२ | १ | सुड्ग्रहणम् | सुड्ग्रहणम् |
| | १८ | सुड्ग्रहणम् | सुड्ग्रहणम् |
| | २६ | सूत्रस्थभोष्योक्ते | सूत्रस्थभाष्योक्ते |
| २२३ | १ | समाहाद्वन्द्वो | समाहारद्वन्द्वो |
| २२४ | ११ | सम्पादयायितु | सम्पादयितु |
| २२५ | ९ | अन्वदेशो. | अन्वादेशो |
| | १३ | उल्लघित | उल्लङ्घित |
| २२७ | ७ | थद्गुणसंविज्ञानो | अतद्गुणसंविज्ञानो |
| ३·७ | २४ | प्रर्याप्त्यनुयोगिता | पर्याप्त्यनुयोगिता |
| | २९ | तन्न्यायप्रवृत्ति | तन्न्यायप्रवृत्ति |
| २३० | १६ | दरदत्तादयः | हरदत्तादयः |
| २३१ | १ | त्यदाद्यत्वं | त्यदाद्यत्वं |
| २३३ | २३ | कथमेनमिति | कथमेनमिति |
| २३४ | १८ | अन्येथगन्तानां | अन्यथेगन्तानां |
| २३६ | ४ | उचैस् शनैम् | उच्चैस् शनैस् |
| २४१ | २३ | प्रातिदिक | प्रातिपदिक |
| २४२ | ५ | दाम्पत्यरूप | दाम्पत्यरूप |
| | ५ | वैश्याशूद्योस्तु | वैश्याशूद्र्योस्तु |
| | १६ | स्त्रीत्यादिविवक्षा | स्त्रीत्वादिविवक्षा |
| २४४ | १२ | इर्ति | इति |
| २४५ | ५ | बहुव्रीह | बहुव्रीहि |
| | २० | दुर्धटः | दुर्घटः |
| २४६ | ९ | अनुस्थानात् | अनुपस्थानात् |
| २४६ | २९ | श्रुतेनान्वयायोगा- दिति भावः | श्रुतेनान्वयसम्भवे अश्रुतेनान्वयायोगादिति भावः |
| २४९ | १८ | ० | युक्तम् शुभ्रंयाः विच् तत. क इति नदीसंज्ञासूत्रस्थभाष्यप्रामाण्या |
| २६७ | २६ | बोग्यता | योग्यता |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६८ | १४ | तत्त लिङ्ग | तत्तल्लिङ्ग |
| २६९ | ३ | व्युत्पतेः | व्युत्पत्तेः |
| २७० | २२ | धिशेष्यान्वय्येव | विशेष्यान्वय्येव |
| २७२ | ८ | यतु | यत्तु |
| २७३ | १२ | निरपेक्ष | निरपेक्षम् |
| | १४ | प्रातिपदिक्वे | प्रातिपदिकार्थे |
| २७५ | १६ | र्निर्बाधत्वात् | निर्बाधत्वात् |
| २७६ | ८ | कारकशब्द | कारकशब्दः |
| २७७ | ९ | अततवैषां | अत एवैषां |
| | १४ | क्रियायां | क्रियायां |
| | १९ | रूढ्यर्थ | रूढ्यर्थे |
| | २६ | व्युत्पत्त्या | व्युत्पत्त्या |
| २७८ | २४ | स्पष्टंचैदमत्रैव | स्पष्टंचेदमत्रैव |
| २७९ | १४ | आधेया स्या | आधेयस्या |
| २८२ | २३ | भुवादिसुत्रस्थ | भूवादिसूत्रस्थ |
| | २५ | क्रियान्तरनिरुपित | क्रियान्तरनिरूपित |
| | २६ | नमेच्चत्सुखं | नमेच्चेत्सुखं |
| | २७ | हेतुमद्भाविनान्वयः | हेतुमद्भावेन |
| २८३ | १ | लिङ्गसङ्ख्ययो | लिङ्गसङ्ख्ययो |
| | १५ | माषः | भावः |
| | २७ | लिङ्क्रियानाधार | लिङ्गक्रियानाधार |
| २८४ | १ | पक्त्वौदनौ | पक्त्वौदनौ |
| | १५ | पक्केति | पक्त्वेति |
| | १६ | पक्केत्यादिना | पक्त्वेत्यादिना |
| | १८ | तमुनत्क्त्वा | तुमुनक्त्वा |
| २८५ | २२ | भाविष्यतीति | भविष्यतीति |
| २८६ | १९ | कर्त्तृद्वारा | कर्तृद्वारा |
| २८७ | ९ | गतार्थमतत् | गतार्थमेतत् |
| २८७ | ११ | विक्लेदनं पचेः | विक्लेदनं निर्वर्तनं च पचेः |
| २८८ | २६ | फलश्रयत्वात | फलाश्रयत्वात् |
| २८९ | ४ | दुह्यादीन् | दुह्यादीन् |
| २९३ | १२ | प्राकृकडारादिति | आकडारादिति |
| २९५ | २६ | कर्मत्वविवक्षायां | कर्मत्वाविवक्षायां |
| २९६ | २६ | उभयशब्दान्तस्यापि | उभयशब्दात्तस्यापि |
| २९७ | १८ | उपरिबुद्धिना | उपरिबुद्धीना |
| ३०२ | ६ | परिभाषिक | पारिभाषिक |
| | २२ | इत्यर्थः | इत्यर्थः |

श्रीगणेशाय नमः ।

# प्रौढमनोरमा ।

ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥ १ ॥

ह य व र ट् । हकारोपदेशः, अट्अणुहशइण्ग्रहणेषु हकारग्रहणार्थः । अर्हेण, अड्व्यवायेऽपीति णत्वम् । देवा हसन्ति, भोभगो इति रोर्यत्वम् । देवो हसति, हशि चेत्युत्वम् । लिलिहिढ्वे, लिलिहिध्वे, विभाषेट इति वा ढः ॥

## अथ शब्दरत्नप्रारम्भः ।

शेषविभूषणमीडे शेषाशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ १ ॥

**ध्यायं ध्यायमिति** । ध्यात्वा ध्यात्वेत्यर्थः । णमुलन्तमेतत् । परं सर्वजगदुपादानम् । कार्यब्रह्महिरण्य(१)गर्भव्यावृत्तय इदम् । ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम् । स्मरणं तु तज्जन्यमिति विशेषः । गुरो(२)रित्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम् । प्रौढानां मनो रमयतीत्यर्थिकां मनोरमाम् । प्रौढत्वं च (३)सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् ।

**इण्ग्रहणेष्विति** । नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात् । फलं तु बहुपुम्कृहित्यादौ पुमः खय्यमिति रुत्वम् । गवित्ययमाहेत्यादिवदपदान्तत्वात्ककारादेर्न जश्त्वमिति चेन्न । सुट्तिथोरित्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात् । अत एवोच्चैरुदात्त इति सूत्रे भाष्यम् "न

(१) "हिरण्यगर्भः समवर्तताग्रे" इति श्रुत्या तस्य कार्यत्वं बोध्यते । "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इतिश्रुतौ तदर्थकब्रह्मशब्दस्य क्लीबतादर्शनेन न तस्य क्लीबनिर्देशेन व्यावृत्तिः ॥

(२) कृष्णपण्डितनामकादित्यर्थः । अस्य सर्वविद्यानिधित्वेनेश्वरस्येवाऽद्वितीयत्वमप्येकवचनेन ध्वन्यते ।

(३) दर्शनार्थज्ञानपूर्वकसकलमहाभाष्यगूढार्थज्ञानवत्त्वमित्यर्थः ।

**हल्** ॥ इदं सूत्रं वलरल्झल्शल्षु हकारग्रहणार्थम् । रुदिहि, स्वपिहि, रुदादिभ्यः सार्वधातुक इति वलादिलक्षण इट् । स्निहित्वा, स्नेहित्वा, रलो व्युपधादिति वा कित्त्वम् । अदाग्धाम्, झलो झलीति सकारलोपः । अलिक्षत्, शल इगुपधादिति क्सः ॥

**हलन्त्यम्** ॥ सूत्रेऽन्त्यमिति । हलि अन्त्यमिति विग्रहे सप्तमीति योगविभागात्सुप्सुपेति वा समास इति भावः । यद्वा षष्ठीतत्पुरुषोऽयम् । स्यादेतत् । हलित्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु । हस्य ल् इति च व्याख्यास्यते । सामीप्यं षष्ठ्यर्थः ।

---

पुनरन्तरेणाचं व्यञ्जनस्योच्चा(१)रणमपि भवति''इति । स्कोरित्यादिस्तु सौत्रः प्रयोगः । अत एवाटि हकारप्रयोजनकथनावसरे भाष्ये शश्छोटीत्युपन्यस्य तदुदाहरणं नोपन्यस्तम् हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम् । अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक् ॥

**इदं सूत्रमिति** । वलादिप्रत्याहाराश्च रेफेणैव सन्तु । हरन्त्यमित्यत्रान्योन्याश्रयपरिहारस्तु "रन्त्यं हर्"इति न्यासेनावृत्त्या हर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन वा सुकर इति भावः । **ग्रहणार्थमिति** । शयमह रित्येव तु नोक्तम् । खरि हकारग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः । **सप्तमीति** । अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्ति सामर्थ्यमिति भावः । अस्य योगविभागस्य भाष्येऽदर्शनादाह—**सुप्सुपेति** । अनेनापि साधनस्यागतिकगतित्वादाह—**षष्ठीति** । हलो हलिति सूत्रस्यान्त्यमिति विग्रह इति भावः । (२)षष्ठी स्थान इत्यस्य चोदुपधाया गोह इत्यादाविव (३)गुणानां च परार्थत्वादिति न्यायेन वाऽप्रवृत्तिरिति बोध्यम् । **तन्त्रावृत्त्येकशेषान्यतममस्त्विति** । यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धं तथापि व्यवस्थितवान्यतमसत्ताऽनेन बोध्यत इति न दोषः । एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः । **सामीप्यं षष्ठ्यर्थ इति** ।

---

(१) अक्लिष्टस्पष्टोच्चारणमित्यर्थः ।

(२) नित्यसाकाङ्क्षार्थबोधकपदसमभिव्याहृतषष्ठ्या आकाङ्क्ष्यमाणसम्बन्धार्थकत्वनियमेन प्रकृतेऽन्त्यत्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन हल इति षष्ठ्यन्तार्थस्याऽन्त्यपदार्थेऽन्वये निश्चिते संदेहाभावान्न षष्ठीस्थान इत्यस्य प्राप्तिरित्यर्थः ।

(३) गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति न्यायः ।

यद्वा मास्तु तन्त्रादि । अस्तु समाहारद्वन्द्वो हल् च लृ चेति । लकारस्य संयोगान्तलोप इति चेन्मैवम् ॥

आद्ये समासस्य क्लिष्टत्वात् । न हि ब्राह्मणकम्बल इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते । न वा चित्रगुश-ब्दाच्चित्रगवीणां समीपवर्ती वृक्षादिः प्रतीयते । अत एवानन्तरादिषु

षष्ठीस्थान इत्यस्य गुणानां च परार्थत्वादिति न्यायेनाप्रवृत्तिः । न च "इकोगुणवृद्धी" इति सूत्रे तच्छेषशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम् । "सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धी" इति सूत्रत्रयस्य लक्ष्यसं-स्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुण-गुणिभावेन परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेः । एतन्मूलकतयैव तत्पक्षा-सम्भवस्य तेनोक्तेश्चेति भावः ॥

**क्लिष्टत्वादिति** । ब्राह्मणस्य कम्बल इत्यादावसत्यपि प्रकरणादौ स्व-स्वामिभावादिप्रतीतिवदनन्तरसमीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वाभावात्तत्प्रयोगे त्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिस-मासे सत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः । तदेतदाह—**नहीत्यादिना तत्रानिष्ट इत्यन्तेन** । **चित्र(१)गवीणामिति** । कुमति चेति णत्वम् । दन्त्यपाठस्तु लेखकप्रमादात् । एवं स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्र-योगेऽपि बोध्यम् । अन्तरेणान्तरे समीपे वेत्यादि भाष्यं त्वनन्तरादिपदा-ध्याहारेण तन्निरूपितसंबन्धार्थिका स्थानपदाध्याहारेण तन्निरूपितसंबन्धार्थिका वा षष्ठीत्यभिप्रायकम् । अत एव मतुप्सूत्रे कैयटेन गावोऽस्य सन्त्यन-न्तरा इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधि-

---

(१) वस्तुतोऽत्र कुमति चेत्यस्याऽसिद्धत्वेनैकाजुत्तरपदे इति णत्वं युक्तम् । गोरतद्धितेति टाच सत्यप्येकाजुत्तरपदकसमासत्वानपायात् । नचोत्तरपदा-वयवीभूय समासान्ताः प्रवर्तन्त इति कैयटमते टजन्तस्यैकाच्त्वाभाव इति वा-च्यम् । तथासति बहुकुमारीक इति बहुव्रीहौ कुमारीकेत्यस्य यदागम-न्यायेन स्त्रीप्रत्ययान्तत्वे गोस्त्रियोरित्यनेन निर्दिश्यमानस्त्रीप्रत्ययस्य ह्रस्वा-पत्त्यादिना तन्मतस्य दुष्टत्वेन हेयत्वात् । नचैवमपि पदव्यवायेऽपीति णत्वनि-षेधोऽत्र शङ्क्यः । अतद्धित इति वार्तिकेऽतद्धितेतिपर्युदासबलेन प्रत्यया-स्याऽव्यवहितपरकपदव्यवाय एव तन्निषेधप्रवृत्तेः । अत एव रम्यवेणित्या-दौ स निषेधो न । उत्तरपदत्वे चेति वार्तिकप्रत्याख्यानपरभाष्यरीत्या गोश-ब्दस्यापि टज्निमित्तकभत्वेन पदत्वस्य तद्योग्यत्वस्य वाऽभावेन तन्निषेधा-प्राप्तेश्च ।

न समासो ऽनभिधानादिति स्पष्टमाकरे । किं बहुना ब्राह्मणस्य कम्बलश्चित्रा गावोऽस्येति व्यस्तप्रयोगोऽपि तत्रानिष्टः ॥

द्वितीयेऽपि संयोगान्तलोपो दुर्लभो यणः प्रतिषेधारम्भात् । तत्प्रत्याख्यानपक्षेऽपि झलो झलीत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च । किं च पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः । अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः सहविवक्षाया असम्भवात् ।

---

रित्युक्तम्, नतु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम् । भाष्यकृता चासामर्थ्यात्तत्र वृत्त्यभाव उक्तः । षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्क्वासामर्थ्यम् । तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः । तत्रास्तिग्रहणाभावे तस्यान्य(१)फलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवच्च तथाभूतानान्तर्याद्यर्थान्तर्भावेण चित्रा गावोऽस्य सन्त्यनन्तरा इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम् । अनन्तरादेरिदमर्थत्वे "तस्येदम्"इति शैषिकोऽप्यनभिधानान्नेति "तस्येदम्"इत्यत्र भाष्ये । तदुक्त**मनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकर इति** । तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणम् । अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव । ग्रामकूपो गङ्गातीरमित्यादौ समीप एवावयवत्वारोपेण समासः । स्पष्टा चेयं रीतिः "अपर्यन्तस्य" इति सूत्रे कैयटे । किं च हस्य लित्यर्थे "हल विलेखने"इति धातोरुपयत्त्वापत्तिः । न च फलाभावो, देवदत्तहलित्यादौ ङित्त्वसामर्थ्यादभस्यापि टेर्लोपर्वाल्लित्त्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेऽपि लित्स्वरस्यैव फलत्वं वक्तुं शक्यमित्यपि बोध्यम् । यद्यपि "हलसीरात्"इति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यम् । तथापि ज्ञापकस्वीकारापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक् ।

**झलो लोपेति** । सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु **असम्भवादिति** । न चाद्यन्तौ टकितावित्यादौ यथासङ्ख्यमन्वये ऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हलपदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं, ततो विशेषजिज्ञासायामादि-

---

(१) अस्तीत्यव्ययान्मतुबर्थकत्व इत्यर्थः ।

**तस्माद्यथोक्तमेव न्याय्यम्** ॥

**मध्यगानामिति** । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आ-

---

रन्त्येनेत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः । किं च, सह-विवक्षा सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव, बोद्धृबोधस्तु क्रमेणैवेति वाच्यम् । "आद्य-न्तौ" इत्यादौ यथासङ्ख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारे ऽप्यन्यप्र-कारेण तस्य साधुत्वकल्पने मानाभावात् । किं च, श्रोतॄणां सह बोधो भवत्वितीच्छया सहवक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि सहबोध एवोचितः । तादृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रा-न्तत्वापत्तिः । मुखनयनं पश्येत्यादौ तु न दोषः । उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात् तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत् । किं च, पाणिनेः पूर्वं हल्पदार्थज्ञाने ऽपि तदभिप्रायेण न प्रयोगः । अन्यथा व्या-ख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या "लट् स्म" इति सूत्रस्थकैयटोक्तरीत्या लक्षणया, तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यैवाभावेन तदाशङ्का लक्ष्येतिवक्तव्यमित्या-दिसमाधानपरभाष्यासङ्गत्यापत्तेः । न चैवमजादिव्यवहारस्यापि लक्षणादिनै-वोपपत्तावादिरन्त्येनेति सूत्रवैयर्थ्यम् । क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात् । "नासूया कर्त्तव्या यत्रानुगमः क्रिय-त" इति "पङ्क्तिविंशति" इति सूत्रे भाष्योक्तेः । तस्मात्करिष्यमाणशक्तिग्रहोपाय-कपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी । ध्व-नितश्चायमर्थो "नाऽऽज्झलौ" इति सूत्रे ऽष्टादशानां ग्रहणाभावाय वर्णाना-मुपदेशस्तावत्, उपदेशोत्तरकालेत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्या-हारोत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरमणुदिदिति सवर्णग्राहकमित्येतेन समुदि-तेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्ग इत्येवं वाक्याप-रिसमाप्तिप्रतिपादकभाष्येणापि । अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिने-स्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धॄणामपि क्रमेण तथा बोध उपपन्ने किं तेन कृतं स्यात्, कथं वा नाज्झलावित्यत्राष्टाद-शादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह—

**तस्मादिति** ॥

**आद्यन्ताभ्यामिति** । अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः ।

क्षिप्यते; तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः। स्वस्य चेति। "स्वं रूपम्" इत्यनुवृत्तेः। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य। अन्त्येनेत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्।

आद्योच्चारणमिति। यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं तथापि तत्प्रौढिवादमात्रम्, करणे घञो दुर्लभत्वात्, ल्युटा बाधात्। न च घः, असंज्ञात्वात्।

---

**तस्येति**। समुदायस्य। **तयोः पारार्थ्येति**। सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाल एव तयोः पारार्थ्यनिर्णयादित्यर्थः। **परामर्शित्वादिति**। वस्तुतो ज्ञापकादिना ऽस्यापि न सञ्ज्ञाकार्यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात्। स्वशब्दानुवृत्तेश्च न फलम्। भाष्ये ऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति। सञ्ज्ञास्वरूपत्वं विशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः। यथा "अच्च घेः" इत्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञाबोध्यत्वं तद्वत्। एवमजादिसञ्ज्ञा स्वसञ्ज्ञिघटकेकारादिष्विवाकारचकारयोरपि प्राप्नोत्येव। किं च, स्वशब्देन केवलान्त्यपरामर्शासम्भवे ऽपि विशिष्टपरामर्शे न बाधकं, तत्र समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति। तस्माज्ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम्।

**भाष्येति**। तत्र हि "उपदेश इति किम्, अभ्र आँ अपः, प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश" इति "नासावुपदेश" इत्युक्त्वोपदेशोद्देशयोर्लोकव्यवहारेण सङ्कीर्णत्वमाशङ्क्य "उपदेशने ऽजनुनासिक" इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनाय "उपदेश इति करणे घञुपदिश्यते ऽनेन" इत्युक्तम्। तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्॥

**प्रौढिवादमात्रमिति**। वार्त्तिककृदुक्तन्यासीयार्थस्य कथंचित्सूत्रतोऽपि लाभसम्भवान् न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः। **घ इति**। अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः। **बाधादिति**। वासरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः। न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम्। ईषत्पानः सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यादिप्रा-

प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात् । न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृता ऽवहेलनाच्च । अत एव घापवादो हलश्चेति घञपीह न । बाहुलकं त्वगतिकगतिः । अत एव प्रक्रियन्ते शब्दा यैरभिरिति करणव्युत्पत्तिरपि परास्ता । तथा च वार्त्तिकम्—

"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति" ।

अतो भाव एव प्रत्ययो न्याय्य इति भावः ॥

यत्तु धातुसूत्रेत्यादि पठन्ति । यच्च व्याचक्षते करणव्युत्पत्त्या पूर्वार्धोपात्तानामुपदेशत्वम् कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादिलि-

---

माण्येनात्र साहचर्यानाश्रयणादिति भावः । **क्लिष्टत्वादिति** । गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्व इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—**नहीत्यादिना** । **भाष्यकृतेति** । अस्यार्थस्येति शेषः । एवं चोभयप्राप्तौ कर्मणीति नियमान्न कर्त्तरि षष्ठीति बोध्यम् । **अवहेलनाच्चेति** । चो हेतौ यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः । **घापवाद इति** । ल्युडपवादश्चेत्यपि बोध्यम् । तत्रापि सञ्ज्ञायामित्यनुवृत्तेरिति भावः । **अगतिकगतिरिति** । न च "खनो घ च" इति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टं तेनात्र घे सिद्ध्यतीति वाच्यम् । तस्याप्यगतिकगतित्वात् । भगः पदमित्यादौ यत्र घित्वफलं तत्रैव तत्प्रवृत्तेश्च । पदस्य घञर्थे केन सिद्धेर्नैतदुदाहरणं किं तु क्वाचित्कं वाक्यं तत् । किं चोच्चार्य वर्णानाह "उपदिष्टा इमे वर्णा" इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणया ऽप्युपपत्त्या भावघञि बाधकाभावः । किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किञ्चित्समुदायान्त्यस्य वारणसम्भवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यादिति बोध्यम् । "उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच उपदेशे" इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक् ॥

**धातुसूत्रेत्यादीति** ।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥ १ ॥ इतीत्यर्थः ।

**उपदेशत्वमिति** । उपदेशशब्दव्यवहार इत्यर्थः । **धातोरपीति** । प्रत्ययेभ्य उणादेरपीत्यपिशब्दार्थः । वाक्यशब्देन वार्तिकम्, । शीङ्, लण्, चोरट्, उण्, आचारेवगल्भ, धुट्, अण्, अनङि-

ङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन । एवं गणत्वादेव सिद्धे धातोरपीत्यादि ।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् । नाद्यः, संज्ञायाः शास्त्रकारैरनुक्तेः, असंज्ञात्वाद् घप्रत्ययो नेति भाष्योक्तेश्च । अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वे ऽतिप्रसङ्गाच्च, आमो ऽमित्त्वमदन्तत्वादिति स्वपरग्रन्थविरोधाच्च, न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं येन मित्त्वं न भवेत् । किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्सञ्ज्ञा न स्यादिति भाष्यकैयटोक्तं, व्याकुप्येत । किञ्च "नधातुलोपः"इतिसूत्रे "धातुग्रहणं किम्? लूञ् लविता पूञ् पवितेति भाष्यम्, उपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञेत्येवंपरः कैयटग्रन्थश्च विरुद्ध्येत । अपि च, घ्वसोरेद्धाविति सूत्रे लोपश्श्चेति-द्विशकारको निर्देशः, द्वितीयः शकार इदिति अलोऽन्त्यसूत्रस्थभाष्यकैयटादिकमपि विरुद्ध्येत । न द्वितीयः । योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात् । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यं हलिदित्यर्थ इति स्वग्रन्थविरोधाच्च । पक्षद्वये ऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात् । लोपश्श्चेति शकारस्यासंग्रहाच्च ।

---

त्युदाहरणानि । **उपदेशसञ्ज्ञेति** । उपदेशपदं योगरूढमेष्विति भावः । ननु सञ्ज्ञाशब्देन व्यवहार एवाभिमतो ऽत आह—**आम इत्यादि** । न चाकारोच्चारणं व्यर्थम् । तेनास्मत्पक्षज्ञापनस्यैवौचित्यादिति भावः । आदिना यकारादी चुञ्चुप्चणपावित्यादिसंग्रहः । **उपदेशाभावादिति** । आदेशस्योपदेशाभावादित्यर्थः । **ततो धातुसञ्ज्ञेति** । लूशब्द एव धातुसञ्ज्ञः केवलमसौ ञित्कार्यं लभत इति भावः । नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणम् । तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन धातुपाठ इत्यादिव्यवहारवदिति चेन्न । आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुपयोगात् । अत एव वाऽरुचेराह—**अपिचेति** ॥

**अलोन्त्यसूत्रेति** । उपधासञ्ज्ञासूत्रेत्यर्थः । **विरुद्ध्येतेति** । तत्र हि लोपशिति भिन्नं पदं शिति च । पूर्वस्य श्चुत्वेन शः । असंदेहाय झल्परसंयो-

"आदेच उपदेशे" "उपदेशेऽत्वतः" इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक् ॥

**उपदेशे ऽजनुनासिक इत्** ॥ यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गगादित्वेऽपि "स्कोः"इत्यस्य न प्रवृत्तिः । "झलां जश्"इत्यादौ जश्त्वस्यैव । शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेति भावः । किं च "नमोवरिवश्चित्र(१)ङ" इत्यस्यासंग्रहोऽत्र पक्षे इत्यपि बोध्यम् । एवमेतस्य रूढिरित्युक्तेः परिगणनताया एव लाभात् । **योग(२)स्यैवेति** । न तु रूढेरित्यर्थः । **परिगणनस्येति** । धात्वादिगणनस्येत्यर्थः । **वैषम्येति** । भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसंग्रहादिति भावः । **उपदेशताप्रयोजकेति** । योगमात्रस्वीकारे उपदेशता- उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । सञ्ज्ञात्वे तु उपदेशता—उपदेशशब्दत्वम्, उपदेशशब्दस्य शब्दपरत्वात् । तदवच्छिन्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः । **शंकारस्येति** । न ह्यनेन किञ्चिदुपदिश्यत इति भावः । ननूपदिश्यते ज्ञाप्यते ऽनेनेति तदर्थः । धात्वादिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यते, इत्यरुचेराह- **आदेच इति** । **सर्वेति** । भाष्यकारादीत्यर्थः । यत्र तु करणव्युत्पत्त्यैवार्थसञ्ज्ञानिः, तत्रागत्याऽस्तु "कृत्यल्युट" इति बाहुलकाल्ल्युडभावः । यथा "यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ"इत्यादाविति दिक् ॥

**नासिकामनुगत इति** । नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः । प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम् ॥

अत एव मुखग्रहणप्रत्याख्यानभाष्यस्य(३)नितो यमानुस्वारयोरनुनासिक

---

(१) चित्रङित्यस्य धातुसूत्राद्यन्तःपातित्वाभावेनोपदेशत्वाभावात् ङकारस्येत्संज्ञाऽनापत्तिरित्यर्थः ।

(२) अयं भावः । उपदेशशब्दस्य धात्वादिषु योगरूढिस्वीकारे धात्वाद्यन्यतमत्वस्योपदेशत्वस्य च समनियतत्वेन धात्वाद्यन्यतमत्वमुपदेशपदव्यवहार्यताप्रयोजकं सम्भवति । योगमात्रस्वीकारे तूपदेशत्वस्यान्यत्रापि सत्त्वेन धात्वाद्यन्यतमत्वस्य तन्न्यूनवृत्तित्वेन समनैयत्याभावान्न धातुत्वादेस्तत्पदव्यवहार्यताप्रयोजकत्वं सम्भवतीति ।

(३) प्रकृतसंज्ञासूत्रे भाष्ये "ये प्रासादवासिनः, गृह्यन्ते ते प्रासादवा-

तार्थत्वाद् 'अनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनम्'इति ध्वनयितुं नेहोपन्यस्तम् । उपदेशे किम् । अभ्र आँ अपः । यद्यपीह "उञ ऊँ" इत्यत्रेव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । अच् किम् । मानिनो मकारस्य मा भूत् । प्रतिज्ञायत इति प्रतिज्ञा । "आतश्चोपसर्गे" इति कर्मण्यङ् ।

---

व्यवहारः सूत्रमते सङ्गच्छते । "यरोऽनुनासिक"इत्यादौ स्वरूपग्रहणाभावस्तु "पशुः" "अपत्यम्"इत्यादिवदिति ध्येयम् । **मन्दप्रयोजनमिति** । मन्देषु प्रयोजनमस्येति बहुव्रीहिः । एवंविधयोगलोकप्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः । **अभ्र आँ अप इति** । अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः । **विधानेति** । इदिति वक्तव्ये ऽनुनासिकविधानसामर्थ्यादित्यर्थः । **नेत्त्वमिति** । तत्फललोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्नेत्यर्थः । ननु 'अभ्र आँ अटितः'इत्यत्र "अनेकान्ता अनुबन्धाः"इति पक्षे "आदितश्च"इतीट्प्रतिषेधः फलम् । न च लोपाभावे इदितिमहासञ्ज्ञाकरणात्सञ्ज्ञाऽपि नेति वाच्यम् । महासञ्ज्ञयैव लोपसिद्ध्या "तस्य लोपः"इत्यस्य वैयर्थ्यापत्तेः । "इक" इ(१)त्यादौ ककारादिश्रवणानापत्तेश्च; इति चेन्न । "अनुबन्धानामेकान्तत्वमेव"इति मुख्यपक्षे दोषाभाव इत्याशयात् । तदा हि मुख्ये ऽवयविन्यन्यपदार्थे बहुव्रीहिः । न चायमाकारोऽट्धातोरवयव इत्यदोषात् । **प्रतिज्ञेति** । प्रतिज्ञानविषय इत्यर्थः ।

---

सिग्रहणेन । ये भूमिवासिनः, गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च" इति दृष्टान्तप्रदर्शनेन मुखनासिकोभयवचनानां वर्गान्त्यानां नासिकापदमात्रेण ग्रहणमभिधाय मुखग्रहणं प्रत्याख्यातम् । तत्पक्षे च यमानुस्वारयोः सञ्ज्ञाऽतिप्रसङ्गमाशङ्क्य "नैव दोषो न प्रयोजनम्" इत्यनेनेष्टापत्तिर्ध्वनिता । तथा च सूत्रमतेऽपि अनुनासिकपदस्य प्रातिशाख्यादाविव व्याकरणेऽपि योगार्थपुरस्कारेण बोधकतामाश्रित्य यमानुस्वारसङ्ग्राहकत्वमावश्यकम् । सूत्रं त्ववयुत्यानुवादकम् । नन्वस्य शब्दशास्त्रीयसंज्ञात्वाभावे "अशब्दसंज्ञा" इतिप्रतिषेधाप्राप्त्या "यरोऽनुनासिके" इत्यादावनुनासिकपदेन "स्वं रूपम्"इति शास्त्रात् स्वरूपग्रहणापत्तिरित्यत आह-यरोऽनुनासिक इति । "हरतेर्दृतिनाथयोः पशौ" "तस्यापत्यम्" इत्यादौ पश्वपत्यादिपदेष्विव व्याख्यानतः स्वरूपाग्रहणासिद्धेरित्यर्थः ।

(१) नन्वन्वर्थसंज्ञया लोपस्य सिद्धावपि तस्य साधुत्वाय सूत्रमावश्यकमित्यरुचेराह—इक इति ।

नन्वत्र ककारादेरित्संज्ञककारसदृशतयेत्त्वाभावेन न लोपापत्तिः । अत एव वैयाकरणे ञित्स्वरो न । इत्यरुचेराह-आदीति । तेन "अइउण्"इत्यादिषु णकारादिलोपापत्तिर्दोषः । वस्तुतोऽत्र महासंज्ञात्वं वक्तुमेवाशक्यम् ।

प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः । एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा'इति क्लिष्टं व्याख्यानं नाश्रयणीयम् । "पाणिन्युपज्ञं व्याकरणम्"इत्यादिष्विव लक्षणां विनैव निर्वाहात् । यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ।

ननु रलयोरिति न्यूनम् । टकारस्यापि मध्यगतत्वादित्यत आह–**प्रत्याहारेष्विति व्यवह्रियन्ते इति** । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति भावः । प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः । चतुर्दशसूत्रीस्थैर्हल्भिर्गिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः । तेन सुप्तिङादीनां रप्रत्या-

---

**प्रतिज्ञाशब्दस्येति** । भावाङन्तस्येत्यर्थः । **क्लिष्टेति** । शक्तिग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसम्भवे लक्षणाश्रयणं क्लेश इति भावः । **लक्षणां विनैवेति** । अत्र लक्षणया व्याख्यानं कुर्वतोऽपि तत्र लक्षणां विना मदुक्त(१)रीत्यैव व्याख्यातम् । एवं च पूर्वापरविरोधस्तस्येति भावः । न चोभयोर्विधाने ऽपि लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम् । "लः कर्मणि"इत्यादीनामपि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः'इतिसिद्धान्तासङ्गत्यापत्तेः । व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य(२) भङ्गापत्तेश्च ॥

**टकारस्यापीति** । अत्र यद्व(३)क्तव्यं तदन्यत्रोक्तम् । **बाहुलकादिति** । भावघञन्तादर्शआद्यजित्यपि बाहुलकादविशिष्टमिति भावः । **एकचत्वारिंशदिति** ।

---

सार्धमात्राधिककालिकसञ्ज्ञाया एव महासंज्ञात्वस्वीकारादिति बोध्यम् ।

(१) पाणिनिसमवेताद्यज्ञानविषयो व्याकरणमित्यर्थस्य शक्त्यैव स्वीकारादित्यर्थः ।

(२) शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥
इति शक्तिग्राहकेषु परिगणनाल्लब्धस्येत्यर्थः ।

(३) "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इतिभाष्योक्तहेतुभिरनुबन्धसामान्यस्य प्रत्याहाराबोध्यत्वलाभात्, "हयवरट्"इत्यादौ हकाराद्युत्तरमसकृदुच्चारणार्थाकारोपादानेनोच्चारणार्थवर्णानन्वितहलां प्रत्याहारबोध्यत्वाभावस्य

हारस्य, "चयो द्वितीया" इतिवार्तिकस्थचय्प्रत्याहारस्य चाधिक्ये ऽप्य-दोषः । यत्तु "ञमन्ताड्डः" इति, "यमिर्ञमन्तेष्वनिडेक इष्यते" इति च ञम् वार्तिककृता व्यवहृत इत्याहुः, तद्भ्रमसाभिधानम् । आद्यस्योणादिसूत्रत्वात्, द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात्; इत्यास्तां तावत् । एष च संख्यानियमो नातीवोपयुज्यत इत्युपेक्षितः ।

**ऊकालोऽच्** ॥ ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । **वां काल इवेति** । फलितार्थकथनमिदम् । **विग्रहस्तु** वः कालो यस्येति बोध्यः । **ऊशब्देन स्वोच्चारणकालो लक्ष्यते । आद्य इति** । "निपाता आद्युदात्ता" इत्याकार उदात्तः । **यच्छब्दस्तु फिट्सूत्रेण । अर्वाङ् इति । अकारोऽनुदात्तः** ।

**तस्यादितः** ॥ **अतन्त्रमिति** । "उपेयिवान्" इत्यत्रोपसर्ग इवा-

---

"एक(१)स्मान् ङञणवटा, द्वाभ्यां ष, स्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः, शलौ षड्भ्यः ॥
इति तदुक्तेरिति भावः ॥

**सौत्रं पुंस्त्वमिति** । यद्यपि इतरेतरयोगे ऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः । **फलितार्थेति** । ऊशब्देन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तत्फलतीति भावः । वां काल इति तु न विग्रहो व्यधिकरणत्वादत आह- **विग्रहस्त्विति** । काल इति जात्याख्यायामेकवचनम् । **स्वोच्चारणकाल इति** । स्वोच्चारणकालसदृश इत्यर्थः । सादृश्यमूलके कालयोरभेदाध्यवसाये तु यथाश्रुतमेव साधु ।

**फिट्सूत्रेणेति** । अन्तोदात्त इत्यर्थः । जसः सुप्त्वादनुदात्तत्वम् । "एकादेश उदात्तेन" इत्येकार उदात्त इति भावः । **अनुदात्त इति** ।

---

**ज्ञापितत्वाच्च टकारस्य न ग्रहणमित्यादीत्यर्थः ।**

**(१) ङञणवटा अनुबन्धा एकैकस्मादेवाऽऽदिवर्णात् परोच्चारिता एकैकं प्रत्याहारं जनयन्तीत्यादिरर्थः । एङ्, यञ्, अण्, छव्, अट् । झष् भष् । अक्, इक्, उक् । अण्, इण्, यण् । अम्, यम्, ङम् । अच्, इच्, एच्, ऐच् । यय्, मय्, झय्, खय् । यर्, झर्, खर्, चर्, शर् । अश्, हश्, वश्, झश्, जश्, बश् । अल्, हल्, वल्, रल्, झल्, शल् । इत्युदाहरणानि ।**

विवक्षितमित्यर्थः । ननु तत्र "ईयिवांसमतिस्रिध" इत्यादिप्रयोगदर्शना-दविवक्षाऽस्तु । इह त्वविवक्षायां प्रमाणं किम्?, इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण । तथा हि–ये ऽरा इत्यत्रैकारः, 'तनूनपात्' 'शचीपतिम्'इत्यत्र पदपाठे ऊदीतौ चार्धोदात्तौ इति सकलबह्वृचप्रसिद्धम् । तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्"इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्"इति शेषनिघातः । पूर्वपदभूतयोस्तनूशची एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम् ।

"जात्यवद्वा तथा वाऽन्तौ तनूशचीति पूर्वयोः"इति ।

तथा स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि–

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्धमात्रा, ऽर्द्धमेव वा ॥
अनुदात्तः परः शेषः, स उदात्तश्रुतिर्न चेत् ।
उदात्तं वोच्यते किं चित्स्वरितं वाऽक्षरं परम् ॥ इति ।

अस्यार्थः पूर्वयोरुदात्तत्वानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो वो-

---

फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति । **अविवक्षितमित्यर्थ इति** । इदं च–वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां, तच्छाखास्थवैदिकोदाहरणविषयम् । **तनूनपाच्छचीपतिशब्दयोरिति** । अस्य यद्यपीत्यादिः । **शेषनिघात इति** । अस्य तथापीति शेषः । तेनोदीतौ अनुदात्तौ प्राप्नुत इति भावः । **जात्यवद्वेति** । पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति ।

अतो ऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे ।

इति लक्षितो जात्यः । उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जात्य इति तदर्थः । तेन तुल्यं तद्वत्, अस्यान्त उदात्तश्रुतिक इत्यर्थः । तथा वा–असंहितवद्वा संहितवद्वेत्यर्थः ।

पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान् ।

इत्युत्तरमस्य पाठात् । असंहितवदित्यनेन केवलमनुदात्तत्वम् । संहितवदित्यनेनार्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम् । **तथेति** । लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः ॥

द्धयः। तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षयोदात्ततरा ऽर्द्धमात्रा बोद्धव्येति। "क्व वोऽश्वाः" इत्यादि ह्रस्वाभिप्रायम्। "अर्द्धं वा" इति दीर्घाभिप्रायम्। अनेनैव ह्रस्वस्यापि संग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः। "अनुदात्त" इत्यादि परिशेषसिद्धार्थकथनम्। सः-शेषः उदात्तश्रुतिः स्यात्। किमविशेषेण ?। नेत्याह—न चेदित्यादि। उदात्तस्वरितपरं विहायेत्यर्थः। शाकल्योऽप्याह—

"अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः।
उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति काम्पितम्॥ इति।

उदादाय-उदात्तं कृत्वा। 'अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथं चिन्नेयाः। क्वेति। किमो ऽत्। तित् स्वरितम्। व इति। "अनुदात्तं सर्वमपादादौ" इत्यधिकारादनुदात्तम्। अश्वा इति। अशेः क्वनि नित्स्वरेणाद्युदात्तम्। संहितायां तु "एकादेश उदात्तेनोदात्तः" इत्योकार उदात्तः। गे अरा इति। द्वयमपि फिट्सूत्रेणान्तोदात्तम्। एकादेशस्तु पक्षे स्वरितः। "स्वरितो वा ऽनुदात्ते पदादौ" इत्युक्तेः॥

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे 'मुखना-

---

**स्वतन्त्रोदात्तापेक्षयेति।** श्लोके "उदात्तात्" इति स्वतन्त्रोदात्तादित्यर्थकमिति भावः। **एवकार इति।** तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः। एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम्। वाशब्दस्तु पादपूरणायेति बोध्यम्। **अप्राकृत इति।** स्वरित इत्यर्थः। **स्वार इति।** स्वर एव स्वा(१)रः। स्वार्थे ऽण्। स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थः। **लक्ष्यत इति।** तदुक्तं भाष्ये—"अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः" इति। हरिरप्याह—

"प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते" इति।

अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थं तस्य हेलाराज आह। एवं च लोके ऽन्यशाखासु च दीर्घादिष्वप्यर्धमात्रैवोदात्तेति भावः। **मतान्तरेति।** प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः। **कथं चिदिति।** लक्ष्यते इत्यंशपरमिदम्। भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः। **इत्युक्तेरिति।** "नोदात्तस्वरितोदयम्" इति निषेधस्तु "उदात्तादनुदात्तस्य" इत्यस्यैव, "अनन्तरस्य" इति न्यायादिति भावः॥

---

(१) अत्र "द्वारादीनां च" इति सूत्रेण प्राप्तोऽप्यैजागम आर्षत्वान्नेति बोध्यम्।

सिकम्' इति स्यादत आह—मुख(१)सहितेति ॥

तु(२)ल्यास्य ॥ आस्ये भवमास्यं, शरीरावयवाद्यत् । इत्यभिप्रेत्याह—ताल्वादीति । आभ्यन्तरेति । एतच्च प्रशब्दबलाल्लभ्यते । तुल्यास्यं किम् । तप्तं । अत्र पकारस्य तकारे परे "झरो झरि" इति लोपो मा भूत् । प्रयत्नग्रहणं किम् । वाक् श्चोतति । शस्य लोपो न । ञमङणनानामिति । 'नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणां प्रातिशाख्यम् । "यमानुस्वारनासिक्यानां नासिका, अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम् । "वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिका स्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यं च । "एदैतोः" इत्यादौ तपरत्वमसंदेहार्थं, न तु तत्कालग्रहणार्थम् । तेन प्लुतस्यापि संग्रहः ॥

---

आस्यशब्देन कथं तदवयवताल्वादिग्रहणमत आह—आस्ये भवमिति । प्रशब्दबलादिति । प्रकृष्टो यत्नः प्रयत्नः । प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप इति भावः । चकारेणेति । अत्र यथा नासिकायाः स्थानत्वं, तथाऽन्यत्र निरू(३)पितम् । न तु तत्कालेति । एषां शिक्षा-

(१) अत्र "मुखद्वितीया वा नासिका वचनमस्य, मुखोपसंहिता वा नासिका वचनमस्य" इति भाष्योक्तेर्द्वितीयेति उपसंहितेति वा विग्रहवाक्ये बोध्यम् । तादृशस्यैव शाकपार्थिवादिगणे पाठकल्पनात् । मुखसहितत्वस्य तु तदर्थपरिचायकत्वमात्रम् । एतेन समासपक्षे शाकप्रियादीनामुत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति प्रयोगस्यासाधुत्वमित्यपास्तम् ।

(२) स्वजनकयावत्स्थानप्रयत्नजन्यत्वं—स्वाजनकस्थानप्रयत्नाजन्यत्वमेतदुभयसम्बन्धेन वर्णविशिष्टो वर्णः सवर्णसंज्ञक इत्यर्थः । आद्यसम्बन्धदानेनैकारस्यावर्णेन सह न सावर्ण्यम् । द्वितीयसम्बन्धदानेनाकारस्यैकारेण सह तद्व्यावृत्तिः । न चैवं कङयोः सावर्ण्यानापत्तिः ककाराजनकनासिकास्थानजन्यत्वस्य ङकारे सत्त्वादिति वाच्यम् । प्रकृतसूत्रे भाष्ये "सिद्धं त्वास्ये तुल्यदेशप्रयत्नम्" इति वार्तिके आस्यग्रहणस्य देशप्रयत्नोभयविशेषणत्वेन नासिकायाश्चौष्ठप्रभृतिकाकलकपर्यन्तरूपाऽऽस्याद्वाह्यत्वेन तज्जन्यत्वस्य सावर्ण्याविघातकत्वात् । 'नासिकाऽऽस्यान्तर्गता' इति मतेऽपि "मुखनासिका" इति सूत्रे नासिकाग्रहणसामर्थ्येन नासिकाभिन्नावयवार्थबोधकमुखशब्दग्रहणेन तत्साहचर्यादत्र सूत्रेऽपि तथार्थकस्यैवास्यशब्दस्य ग्रहणेनादोषात् ।

(३) यद्यपि कण्ठाद्यवच्छिन्नवायुसंयोगादकारादेरुत्पत्त्यनन्तरं नासावच्छिन्नवायुसंयोगेनाऽऽनुनासिक्यगुणोत्पत्तेर्नासिकायास्तत्र गुणजनकत्वान्न स्थान-

**पूर्वत्रासिद्धम्** ॥ यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि 'त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत आह—अधिकारोऽयमिति। यद्यत्र कार्यासिद्धत्वमिष्येत तर्हि पूर्वत्रासिद्धमिति 'मनोरथः' इत्यादावुत्वं न स्यात्। परत्वाद् "रो रि"इत्यस्य प्रसङ्गात्। तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य"इति सिद्धान्तो व्याकुप्येत। अमू, अमी, इत्यादि च न

---

युक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः।

**नासिद्धं स्यादिति**। ततश्च गोधुङ्मानित्यादौ घत्व(१)जश्त्वानुनासिकेषु भष्भावो न स्यात्। न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः। सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः। मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमनाविरहात्त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति भावः। **रो रीत्यस्य प्रसङ्गादिति**। सिद्धे ऽसिद्धत्वारोपात् सूत्रोदाहरणसंपत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तृहतन्यायेन स्थानिभूतरोरभावाद् "हशि च" इत्यस्याप्राप्तिरिति भावः। स्पष्टं चेदं प्रकृतसूत्रे "अचः परस्मिन्"इत्यत्र "षत्वतुकोः"इत्यत्र च भाष्ये।

**तथा चेति**। शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे "रो रि"इत्यादेः प्रसङ्गे चेत्यर्थः। **व्याकुप्येतेति**। त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्य

---

त्वं, यद्देशावच्छिन्नवायुसंयोगाद्वर्णोत्पत्तिस्तद्देशस्यैव स्थानत्वात्, तथापि ङकारादेरनुनासिक्यरहितस्वरूपानुपलम्भात्तद्वर्णोत्पत्तिस्थान–नासिकेतदुभयावच्छिन्नवायुसंयोगोत्तरमेव स्वरूपोत्पत्तेस्तत्र नासिकाया अपि स्थानत्वम्। "अनुस्वारयमानां च"इति शिक्षायां चकारेण ङञणनमानां सङ्ग्रहान्न न्यूनतेति बोध्यम्।

(१)अत्र घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु भष्भावो न स्यादिति विवक्षितोऽर्थः। वस्तुतोऽत्र जश्त्वं प्रति भष्भावो ऽपवादत्वाद्बाधेत। नच तं परत्वादनुनासिको बाधते, तं चाऽन्तरङ्गत्वाज्जश्त्वं, तच्चाऽपवादत्वाद्भष्भाव इति चक्रकापत्तिरिति वाच्यम्। जश्त्वापेक्षयाऽपवादत्वादनुनासिकापेक्षयाऽन्तरङ्गत्वाच्च पूर्वं भष्भावसिद्धेः। तस्मादत्रानुनासिकापेक्षयाऽन्तरङ्गत्वात्प्राप्तं जश्त्वं निरवकाशत्वेनापवादत्वाद् बाधित्वा "झयः" इति वत्वापत्तिर्दोषो बोध्यः। न च तडित्वानित्यादौ तान्ते चारितार्थ्यं वाच्यम्। तावन्मात्रेण 'झय'इतिप्रत्याहारग्रहणाचारितार्थ्यस्य तदवस्थत्वात्।

सिध्येदत आह–त्रिपादीति । परं शास्त्रमिति च । एतेन त्रि-

---

वा ऽसिद्धता वक्तुमशक्या, किं तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्या ऽसिद्धत्वं (१) वाच्यम् । एवं च विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भावः । न च ममापि पूर्वपरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया शास्त्र एव कार्यासिद्धत्वमिति वाच्यम् । लक्षणायां मानाभावात्, फलाभा(२)वात्, गौरवाच्च । ननु मनोरथे दर्शनाभावरूपे लोपे ऽभावारोपस्य दर्शनारोपरूपत्वेन न दोषो ऽभावाभावस्य प्रतियोगिरूपत्वादित्यत आह–**अमू इत्यादि** । अद अ औ, अद अ अम्, इत्यवस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्या ऽसिद्धत्वे ऽपि पूर्वरीत्या ऽकाराभावेन पररू(३)पाद्यनापत्तिः । मुत्वस्यासिद्धत्वनिषेधसामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति चेत्तेन शास्त्रासिद्ध(४)त्वमेव ज्ञापयितुं युक्तम् । एवं शीभावात्पूर्वम् "अदसोसेः" इति मु-

---

नचातिदेशान्तरांते । "अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे ब्रह्मदत्तवदयं भवति" इति संख्यासंज्ञासूत्रस्थभाष्येण वतिनिर्देशाभावेऽप्यतिदेशत्वस्वीकारवत् प्रकृते वतिनिर्देशाभावेऽप्यतिदेशसूत्रत्वमस्त्वित्यर्थः । नचैतदृष्ट्या त्रिपाद्या असिद्धत्वेन कथं तत्रास्य प्रवृत्तिरिति वाच्यम् । वाक्यार्थबोधकालेऽस्य सूत्रस्य बोधजनकत्वेन बोधाविषयत्वासंभवात्स्वस्य पूर्वशब्देनाग्रहणात्स्वदृष्ट्या त्रिपाद्यसिद्धत्वबोधनासंभवात् ॥

(१) लोकेऽनाहार्यज्ञानस्यैव प्रवृत्त्युपयोगित्वेऽपीह शास्त्रप्रामाण्यादाहार्यारोपस्यापि शास्त्रप्रवृत्तौ निवृत्तौ च नियामकत्वमिति भावः ॥

(२) नच शास्त्रासिद्धत्वपक्षे यत्र द्वयोः सहप्रसङ्गस्तत्र त्रैपादिकस्याप्रवृत्त्युपपादनेऽपि यत्र हर एहीत्यादौ निष्प्रतिपक्षत्वात् "लोपः शाकल्यस्य" इत्यादि त्रैपादिकशास्त्रं प्रवृत्तं तत्र वृद्धिशास्त्रदृष्ट्या लोपशास्त्रस्यासिद्धत्वेऽपि वस्तुतो लोपस्य लक्ष्ये जातत्वेन निमित्तसद्भावाद्वृद्धिशास्त्रस्य प्रवृत्तिः स्यादेव । कार्यासिद्धत्वे तु यलोपस्यासिद्धत्वेन निमित्ताभावाद्वृद्धेर्न प्राप्तिरिति फलसद्भाव इति वाच्यम् । शास्त्रासिद्धत्वपक्षेऽपि शास्त्रेऽसिद्धत्वबोधनेन तद्विहितादेशे लक्ष्ये जातत्वबुद्ध्यभावस्य तत्कृतस्थानिनिवृत्तिबुद्ध्यभावस्य च बोधनेनादोषात् ।

(३)इष्टपररूपाद्यनापत्तिरित्यर्थः । एतेन प्रथमाकारस्य तृतीयाकारे परतः पररूपप्राप्तिसद्भावेन तदनापत्त्युक्तिरसङ्गतेत्यपास्तम् ॥

(४) नच कार्यासिद्धत्वेऽपि त्रैपादिकं कार्यं न जातम्, तत्कृता स्थानिनिवृत्तिर्न जातेति संभावनायां यत्कार्यं प्राप्नोति तद्भवति यच्च न प्राप्नोति तन्न भवतीत्यर्थस्वीकारेण प्रकृते मुत्वे कृतेऽपि तन्न कृतं तत्कृता दकाराकारनिवृत्तिर्न जातेति संभावनायामुकार एवाकारबुद्ध्या पररूपे सन्नियोगशिष्टन्यायेन मकारनिवृत्तौ प्रत्ययौकारे परतो वृद्धौ तद्धटकमात्रोद्देश्यकविकारातिरिक्तघटितत्वेन तल्लक्ष्य-

